कविकुलगुरु कालिदास संस्कृत विश्वविद्यालय, रामटेक

हस्तलिखित संग्रह

दाखल क्र M 940 विषय પુરાણ

नाव. શ્રીમદ્ ભાગવત વ્યંજના (Mss-

लेखक/लिपीकार ઢુંઢીરાજ કવિ રચિતમ્

पृष्ठ 58 काळ — पूर्ण/~~अपूर्ण~~

श्रीकृष्णाय गुरवे नमः ॥ अम्बां दासोऽतिशुक्लानन्दशन
वसनयोर्लोहितां केशपाशे कृष्णां वन्दे कुलेशाम्बकलि-
विद्योतिभिः सप्तभिः शृङ्ग दम्भात् ॥ राजन्त्वं या प्रपञ्च
मुनि शिखर मधिष्ठाय शैलं व्यकास्ति ब्रह्माण्डा खण्ड मू-
ल मवलि रविकलि श्वेलना लिङ्गि लाङ्गि ॥ १ ॥ नचाला
रब्धा दूरीकृत भविकचया कुण्डया कृष्णदग्भ्यो भक्तान्वास
र्पयन्त्वं श्रवण पवनत स्लासु रिक्तासु चैषाम् ॥ विद्यान्वा

स्थापयन्तं पदविनतजन्तणां योगभद्राख्यकल्पं स्वाङ्के-
नैवाचरन्तं शरणमभिमुखं तं दयालुं प्रपद्ये ॥ २ ॥
हरित्पालान्वेणोरस्फुटमधुरालापविवशान्स्कुर्वन्त
ङ्कालाभयसुखमहालाभदपदम् ॥ विशालाक्षं कञ्चि-
न्नवघनतमालाभमनिशं भजे गोधुग्बालानयनवन-
मालापरिचितम् ॥ ३ ॥ कालिन्दीपुलिने चरन्वदन-
जैर्वातैः सुवेणोर्नखैश्छिद्राणां परिचालनैर्व्रजसखी-

चेतांसि सञ्चालयन् ॥ यान्तीनां रमणेषु मोहनिचयं

संवर्धयन्केशवो ढुण्ढः पण्डितमण्डनस्य विपदं विद्रा-

वयन्रक्षतु ॥ ४ ॥ रसज्ञरसवैरिणा रुभयमेव पृथ्वी

चरन्नेकतरमेतयो रपि रसग्रहे प्रार्थये ॥ कलिर्हि

सरसास्तिचेदिह रमेत पूर्वः स्वयं प्रनिम्न इव वारधेः

वदन कुम्भबन्धुः परः ॥ ५ ॥ वर्तध्वे चित्स्वरूपाः श्रु-

ति नियमबलात्सर्वदा जागरूकास्तद्युष्मान्प्रार्थये ऽह-

न्मुहुरिदमखिलानाऽऽविधेरांच कक्न्यात्त ॥ उत्प्रेक्षा-
दिप्रयुक्त्या सद्ऽसदपि गिरा प्रोच्यते यद्यदस्मिन्का-
व्ये तत्तत्क्षमध्वन्त्विज निज सदलङ्कार संभावनाभिः ६
शुकमुखादिह भागवतामृतं विगलितं शुभदेव वशग
न्महत ॥ समनु लक्ष्य बुधान्य गदन्त्विदन्त्यज सुधे
वसुधे भज धन्यताम् ॥ ७ ॥ अस्ति श्री मथुरापुरी
मधुरिपोः सान्निध्यभाकसर्वदा वैकुण्ठस्य नवावतार

इव या वासो यदुक्ष्माभृताम् ॥ तस्यां यो वसुदेव इत्य
भिहितो यो देवकीति प्रथां प्राप्ता वृष्णिकुलोद्भवौ न्य-
वसताङ्कन्या कुमारश्चैतौ ॥८॥ पूर्वस्मिन्ननघे जनुर्द्
य इवाप्यस्मिन्भवे सैव मान्या क्षोणीं सुधंते रिलीव निभृ-
तं संसूचयन्पाणिना ॥ पाणिङ्गूढ मप्यापिडत्सुविधिना
तस्याः सकं सस्वसुर्यद्वा काञ्चन रत्नयौतक युतां जग्राह
युद्धाभटीम ॥९॥ हंतोदायिष्यति हनिस्त्व नष्टबुद्धे विस्प

ष्ट मष्टमसुतादिति कष्टमस्याः ॥ इत्युग्रसेनजनुषः सु
रवर्त्मवाणी बाणी बभूव हृदयान्तरमर्मभेत्री ॥१०॥ सो-
ज्झित्वात्मानमिद्धा पदि पदमपथे स्थापयिष्यन्तमस्वान्तस्त
न्मार्गे बद्धदृष्टीन्स्वजवमपि तिरश्चोनुयातो गुणान्स्वान् ॥
आप्याकृष्टान्कराभ्यामनुपयत इव प्रग्रहान्त्रास्य हस्तग्रा
हं जग्राह कंसः सपदि तदलकान्दुर्मतिर्दुर्गुणांश्च ॥११॥
साध्वीमुदाराञ्च गुणैः प्रसक्ते प्राणव्ययेपि प्रतिपालनीयाम् ॥

कंसः स्वसारं निशितासिनापि क्रियामिवच्छेत्तु मसौ प्र-
येते ॥१२॥ हन्तुं स्वां भगिनीं व्यधायि न पुरस्तेनासि यष्टि
र्द्विषत्कीलालार्द्र एष हतो परमहो दुष्कीर्तिरेवास्य सा ॥ तस्याः
स्वर्गपदाधिरोहणलसत्सन्देहतो रिहेतो नमद्रागानून मनून दोहि
रकरोत्सोत्कंठकण्ठग्रहम् ॥१३॥ अह्योढकान्ता विपदग्रद
ग्धः कंसस्य याणि व्यसनोपलब्धे ॥ इत्थं विमर्शे किल शूरसू
नोर्भिन्नाथरीत्या हृदि निर्णयोऽभूत् ॥१४॥ आत्माध्युपास्ति 

निभृताहित भूरि वीर्या संत्याजितोद्भव पदैत्य फलानि कामम् ।।
भार्यैव रोगकृ विकलस्य यदूत्तमस्य सत्कर्मपद्धतिरिवाकृत चित्त
शुद्धिम् ।। ३५ ।। स्वहृदय गर्भगानपि विजित्य न षट् प्रथमं सह
जरिपून्स्वसुर्बत शिशून्नव धीन्मधुपः ।। तदिदम् कर्मवासुरमुनिः
कथमैधयत क्षितिमथवा परीक्ष्य वपन्ति बुधा उचितम् ।। ३६ ।।
एकेनद्वे मातरौ गर्भवत्यौ येनाभूतां यश्च नागाधिराजः ।।-
मूर्ध्निक्षोणीं सर्षपं मन्यते यां सातं दध्रे सर्षपीभाव यन्ती ।। ३७ ।।

भूभार भूत भव भूरि भयानकेन्द्र प्रत्यर्थि कैतव महीपति वाहिनीभिः ॥
सम्प्लाविता न्सकल सज्जन साधुमार्गा नुद्धर्तु मैहत विभुर्विधिना
र्थितः सन् ॥१८॥ पीताकाचघटी वसम्भृत मषी श्रीकृष्ण संधा
रणाद्गर्भे कैतक गर्भ गौर तनु रप्यन्तर्बहिर्देवकी ॥ कृष्णाङ्गी सम
हश्यते हन भयात्कंसस्य सापि ध्रुवं तच्छाया प्रति बिम्बनस्य कल
नात्कालस्य कालानलः ॥१९॥ पूर्णं ब्रह्माधिवर्षं विद्धत गुण मधि
श्रावण श्चाधि तामस्य तपक्षं तत्राधि रोहिण्यधि रजनितथा ध्यष्ट मिस्य

ष्टमिष्टम् ॥ दातुं सञ्ज्योधिर्मेदिन्याधिमधुरमाधिष्ठाय तेजोधि

कारागारं किञ्चाध्यगिष्टं परमधिशयनं सर्वतः प्रादुरासीत् ॥२०॥

सुपर्वलोपाय यथा यथा क्रमं प्रभुः स खर्वोऽपि पुरा स्म वर्धते ॥

पितृप्रियायात्र महानपि स्वयं लघुर्बभूवेन्दुरिव स्वपूर्वजः ॥२३॥

रथ्याचत्वरवितर्दिमर्थिनो लब्धमर्दितकपर्दिनो निधिम् ॥ न्यस्य

तत्र पतिताङ्कः पर्दिकां गृह्णतोऽनुकृतिरापि शौरिणा ॥२२॥ बहुरक्ष

णं यदि भवेदवद्यमप्यनुसार्यमक्षिणि निमील्य कोविदैः ॥ इति बोध

अधम कुप्यं कुत्सितावद्य

यन्निव निशाचराङ्गनां विहितेक्षणः क्षणेन महन्त्स शास्त्रकेतु ॥२३॥
परः सहस्रा सुरवंश्य भोजी स्तन्येन तस्याः किल बाल्यकालः ॥ प्राणा
हुतीनां सह पञ्चकेन मन्ये मखोपस्तरणं चकार ॥२४॥ काव्यालंकार
विद्याव्यसन परवशे वाद्यस्ताम्रत्यनीकालंकारस्य स्मरन्ती व्रज धरणि-
रुहानालिङ्गव्यूत्सभांक्षीत् ॥ मूर्तिं स्वां संप्रसार्याद्भुतमपि च परं रूपमा
क्षिप्य शाब्दं शास्त्रं व्याकुर्वतीव प्रलयघनरवा बिभ्रती पूर्वरूपम् ॥२५॥
मोक्षं वराज्जु मघमूर्ति रियं मुकुन्दमाप्यात्मन स्तु परिपूर्णमनोरथापि ॥

मासीत्सरत्करपदं स्वजनस्य मुक्त्या लोभान्धनेन ननु दीप्यति लो-
भवन्ति: ॥२६॥ अहो मदीयस्तनु दाहन क्षमं क्व वन्धनं स्यादि-
ति संभ्रमाकुला: ॥ द्रुमच्छिदं वीक्ष्य नु तां नगो दुरा विषादका-
लेपि मुदं व्यमुञ्चत ॥२७॥ शङ्कां पुनर्ग्रह परामथ विभ्रमाविचेतां
चलेन मरुतापि दुरासदेन ॥ सद्यः सुखं पिदधतो किल तस्य
साध्वी नंदाङ्गनास्तनमदाहृदनारविन्दे ॥२८॥ मायच्छं सुदृढं
विचार्य हृदये प्राक्चीर्णभक्तेः फलं स्वीयं बालतृणी क्लतामृत

सुखं बाल्यात्मकं वैभवम् ॥ अस्येस्तन्यपयः पिबेन्नतु मया कि
न्देयमित्याकुलोपश्यत्सर्वं विदप्यसौ ननु हसन्मातुर्मुखं विस्म
यात ॥२९॥ घ्नताजितोप्यधिहृदयं तदाश्रिता बेहलनादुपरि
गतोप्यधः पतेत ॥ इति ब्रुवन्निवरजसार्दिल व्रजस्तत्क्षणभ्रमः
सहरिरिहापतद्दिवः ॥ ३०॥ कृत्वाभ्रंकष मीषदप्यविरलभ्रा
all powerful न्तिर्नं सर्वंकषं कालात्मानमिमं विकर्तुमशकद्वात्याकरीषं आंधी-बादल
कषा ॥ किंत्वेतां विभुरादर्शीमपि परं संसारकूलंकषांभोधेः ८
नदी

पारमज़ीगमच्छलयता मप्याशुमदंकरः ॥ ३१ ॥ प्रथमोल्ला
सः ॥ आरव्याकर्मा विधाय स्वतनय युगलस्याषडक्षीणदेशे भू
शुध्यादेरपेक्षा मतिचरति शुचौ गोव्रजेनो व्रजेतः ॥ इत्थं गर्गः
संमतो व्रजमुपगतभीः कंसतोरं संतोषं नन्देन प्रार्थितः सन्न
ष्टनभगवतो: कल्पना मल्पनाम्नाम ॥ १ ॥ वत्सग्रन्थिविमो-
चनं प्रकुरुते बालान्विकर्षत्यसौ स्वास्येनापि च सर्वतोमुखमयं
संयोजयन्तोजसा ॥ सर्वं पातु मशङ्कुवन्नपिमरो रध्वन्यवञ्छेषते

गुह्यं स्त्रीभिरिति प्रसूं प्रति हरेरन्यार्थतः स्मोच्यते ॥२॥ नित्याप
राधशतकं व्रजसुंदरीणामाकर्ण्य सूनुविहितं मुखतो यशोदा ॥
मोदातिशोभिवदना मदनात्तचित्तास्त्वागतसाऽक्षिपदनाथ
पतिं नभीतम् ॥३॥ वीजावापविधिं यदि प्रकुरुते लोको विचि
त्रं त्विदं मातुर्भक्तिरसेन गोपनिखिलं स्वास्यालवाले यदम् ॥ यद्बृंदं
वपति स्म यत्र समभूदुर्वी वियद्वल्लिवावापुष्पूह वनव्रज व्रजवधू
व्राताङ्कुरोज्जृम्भणम् ॥४॥ इक्षचक्र भ्रमिमावहन्व्रजवधूवर्गस्य

सत्त्राकिंकैः कृतस्त्वैक निदर्शनीकृतकुतो लोसौ विभुः स्वानने ।।
आमं पश्यति वस्त्राञ्चलतया दण्डम्प्रसूहस्ततो गृह्णन्त्यमदापराम
जनपद्व्रह्माण्ड भाण्डक्रियाम् ।। ५ ।। सर्वाङ्गभ्रमणैः कियन्तमव
धिं पश्यन् कराभ्यामथो जानुभ्याञ्च कियद्दिनं व्रजमदं रिङ्खन्
न्यधेच्छं भुवि ।। पद्भ्यामेव कियत्समं परिलिहन्न्यास्यन्पुरे द्वारकां
दूरे हातुमशङ्कुवन्निव हरिर्गूढम्पिचाण्डेन्यधात् ।। ६ ।। अस्पृष्ट-
कल्पनगमेरुमणिस्थलीकौ नौका स्थिते सकलगोकुल भूसमस्त्वे ।।

एकप्रदेशगतयापि मदायदस्याः स्तद्रूपतः शिशुमुखे परिणम्यतेस्म
॥७॥ प्राप्तां कथं महो व्रजभूमि र्मत्कणोपि हि मयाग्निमकल्पि ॥
इत्थमत्यमितजगत्त्रय तृष्णा वत्सवादेर किमु विभुः समगच्छात् ॥८॥
मुक्तिं ददाति न कदापि हि भक्तियोग मित्युक्तमात्मनियमं व्रज
गोपबालैः ॥ सख्यं जुषद्भिरति मुक्ति समीक्ष्य भग्नं किन्दीन
वन्मदमदा हृदने मधुद्विट् ॥९॥ क्षीराकूपारकन्या करस्फुत
दिविषद्धेनुगव्योत्थभोज्या विच्छिन्ना स्वाददत्ता रुचिजठर सना

शोधनायेवमत्स्नाम् ॥ कृत्स्नात्मप्रेष्ठगोपार्भकनवविवि
धान्नस्पृहां बिभ्रदम्रत्विड्विट्टृद्देहरोचिर्भ्रेशसफलितसत्क्ष्व
ष्णनामामिलितेह ॥१०॥ गेहोपलेपादिनियुक्तदासीपरागसंस्पृष्ट
करावमर्शात् ॥ विकारभीत्या हरये कदाचित्स्वयं यशोदा दधि
निर्ममंथ ॥११॥ गायन्ती मुरकाल बालचरितं स्निग्धत्वगर्वा
न्वनुक्षुभ्यद्व्यजिगीषयेव बहि बहि निर्यत्पयः सञ्झरो ॥ बि-
भ्राणात्तरुचै कुचौ शिशुमती नन्दाङ्गना मथ्नती नव्यं हव्य-

मुञ्जेऽपि लोभयति यद्धव्यं तदव्यं जयत ॥१२॥ कुर्वन्मन्थान दण्ड
न्निज कर कलितं देवता भूतशाक स्तंभान्निश्चेष्ट हस्तां विदध
दथ हरिः स्तन्यकामो यशोदाम् ॥ क्षीरं चोद्रिच्यचुल्यां शुचि-
मरुदरुणैः शोषयन्भीत भीतै भीषाश्रुत्या विजन्हे मणिकमपि धागर, स्नि
हषन्रत्युना घातयन्द्राक ॥१३॥ धत्तेधश्च खलाक्षरान्वयमितो
वाद्भिः द्वये नाधरो कुर्वन्नेष उलूखलं खलतलैः शास्त्रास्वकार्ये
पुरा ॥ मर्केभ्यो विहितो घमेभ्य इव सैन्ह्यंगवीनं ददद्भुंक्तेस्म

स्वयमप्य कुण्ठविभवः पाटच्चरा चारभाक् ॥१४॥ उत्थास्थान
एव मयलत्पदस्य विकंपमानस्य जळार्द्र देह: ॥ पुंसः पुराणस्य
गृहीतयष्टिः प्रसूः कराग्रेन्व चलन्त चित्रम् ॥१५॥ श्रुतिनुतम-
लिशेते निर्गुणं यत्स्वरूपं ननु दश करशाखोन्मानतो व्याप्यवि-
श्वम ॥ कथम विबुध गोपाङ्गाविर्तेस्तैर्गुणौघैस्तदफल परिमाणे
ह्यंगुलो नैर्नभाव्यम ॥१६॥ चौर्यानुकूल्यमदनमत्रमुलूखलंचरू-
षंन्चतत्र सहसापि विमुक्तिदन्तम् ॥ रोषाद्बन्धजननी कठिनेन

दाम्ना साम्नापि यं न वशयन्ति विरिंचिमुख्याः ॥ १७ ॥ शुष्कं स्रजा
त्योर्बत चिन्तयैव लग्नं विमोक्षणार्थ मिवेश पृष्ठे ॥ स्वीकुर्वतोः स-
द्यमलार्जुनाख्यां बभूव मध्यस्थ मुलूखलं तत् ॥ १८ ॥ सोढुं विलम्ब
मसमर्थ मिव प्रसादे तिर्यक्स्खलच्चरण पंकजयोरुपान्ते ॥ संगृह्य
मानमिव लिष्ठदुपाचकर्ष यत्संश्रयात्तदधिदुग्धघृतस्तदोरः ॥ १९ ॥
विवेक हीनं बहुधान्यखण्डने रतं स्वरन्ध्रे पि दृढानुबन्धभाक् ॥ गु-
णैर्जघन्यैर्जगदीशसंश्रयादुलूखलं स्वर्नपतिस्म भूरुहौ ॥ २० ॥ उप

कलं पमलार्जुनयोर्भुवं सिततनूजनुषे व यशोदया ॥ विदितब-
न्धनपीड इवे षतौ मुनिविनिम्नहतो यदमूमुचत ॥२१॥ कुबे
न्धनेश तनयौ द्रुमजन्मभाजौ श्रीमान्स्वयं स तरसा कलितां
घ्रिबन्धौ ॥ पित्रो मुखं मुहुरुपेक्षित पादबन्धः प्रादीदशत्किल
कलौ समपक्षपातम् ॥२२॥ लब्धं प्रसूजनक भेदजुषा च्युतेन त्वे
काबबन्ध यदमुं विमुमोच चैकः ॥ कर्मच्छलात्प्रसित मन्ननुते न
यो मां मुक्तिं नयेद्धि जननी जनकः स एव ॥२३॥ भ्रातृभिः कि-

~~होय आहे कि~~ Bound to be

ल विभज्य गृह्यते पैतृकं धनमिदं तु साम्प्रतम् ॥ स्त्रीकृतेनु-
जनुषा ह्युलूखले संनुन्नोषु मुसलं करेऽग्रजः ॥२४॥ वैकुण्ठा
दवतीर्य तूर्णमिह सद्वृन्दावनं कुर्विति ब्राह्मीं वाच मनुक्षणं
प्रपठितां वैयग्र्येऽतोगिव ॥ श्रीमान्विस्मरन्नलक्ष्मिकयन्नलमव
धिं भिन्नार्थ यँक्लीलया श्रीकृष्णः स्मरन्वदुरात्म हननात्पूर्वा
ययन्नप्यभात् ॥२५॥ लोके नारद मात्मनो विदधता नैकान्ति नारद
कत्वार्पणा सत्त्वेनेव बहिष्कृतेन तमसा शोकान्येन संवेष्टितः ॥

दैतेयो ऽपिबकोऽपि बन्नपि सुखा दार्द्धत्तमे वद्धुलं शुद्धा ऽमापि हृदि-

श्रयन्नपि हृढं प्राप्नोति कालेनयम् ॥ २६ ॥ श्रीदेव्याप्रार्थितोऽपि

श्रवसि निरुपम्पद्मरागेन गध्यान्द्रायोरायो नरन्नुबत हृदि विलस

त्पद्मरागं बभार ॥ सोऽयं श्रीनन्दसूनू रत्नायतु मन्चिनो देह भूषावि

शेषा गुञ्जापुञ्जान्नि कुञ्जाभिनवरतिपरिक्रान्त मुञ्जाटवीकः

॥ २७ ॥ तमापनाशार्थ मघो मघोनो रिपुर्बलेनाप्य लघोः सघो

रः ॥ अघोच्चयं यस्य हिना मघोषस्तूर्णी करोति ज्वलनायमानः २८

गूढं चेतसि वञ्चिमाणमनिशं गृह्णन्नयं धूर्तराट् सोढेनो बहिराज्ञे वा- उघड = honestly

Breaking तोडणे

द्धि घटकं हस्ताद्द्विःकर्णं ध्रुवम् ॥ किंवा श्रीहरये कृपाजलधये दा-

स्यन्न स्तनादंदे प्रागेवा मम पाणि पादजवनं श्रुत्युक्तरूपोदयम् ॥ २९ ॥

आकांक्षन्न विभेदतो भगवतो बस्थानमेवात्मना स्वीकुर्वन्व्रज पु-

ण्यदेशे वसतिं भूमौ शयानश्चिरम् ॥ एको विग्रह मात्रसंग्रहपरो

वातांशनो निश्चलो गोविन्दैकमनाः सनातकिभयकृद्योगीव भो-

गी बभौ ॥ ३० ॥ द्वित्रैरंभःपृषत्कै रिव मुख कलितैर्नामवर्णैस्त

आदर्श = किशाल

दीर्घैर्लोकैस्तूर्णं कृतार्थी भवितुमुचिततां बिभ्रतोदभ्रबुद्धेः ॥ व्यासा
स्ये चातकस्यास्य घन इव घनश्याममूर्तिः प्रविष्टः प्राणानां रोधको
भूच्छुभ कृदपि सताम्भाग्य किञ्चिद्विचित्रम् ॥ ३१ ॥ चित्रं नैवात्र यद्दे-
मजस्यापि वः प्रादादस्मै निजां गीतम् ॥ परेलुस्यापि यस्यासौ चिक्रीडहृदयेऽचि
रम् ॥ ३२ ॥ सन्मण्डलाकारमथो दधद्भिः साकं सुहृद्भिर्वनभोजनं सः ॥
विधास्यमानाद्भुतरासलीला भाष्यस्य सूत्राणि तमाचचार ॥ ३३ ॥
पीयूषादरपश्यतो हरगुणं गीर्वाणचेतोहरं स्वस्यापीह सुदुर्ल

भायितमिव स्नेहेन दध्योदनम् ॥ गोपायं प्रददत्य दक्षिणकरे संब
न्धु मुष्टिर्बभौ वत्सान्वेषण कृत्स्यन्तलतिभिः कुक्षिंभरिः श्रीहरिः
॥३४॥ कथंचिदपि देवता वनगतामदायान सून्स्तव स सुहृ-
दो हृदो बहिरवच्युतान्काननेन ॥ प्रादधुरिति भावयं श्छिन्नदया
ब्धिरासंत मुदे करेबलि मिवा वहन्स विचिकाय दध्योदनम् ॥३५॥
अनूढ प्रारब्धा दरमज्जन नीगर्भ विकलं बलानन्यक्षिप्तौदन कव
ल संरुध्द लपनम् ॥ अनालीया भिरख्या क्षार विवरण कुश

विवशं सुहृद्वृन्दं देवः सपरिकर मन्यादृग स्तजल् ॥३६॥ धर्षेव असाधारण
त्वं ॥ स्त्रिराधा ॥ हितुरिति किमिदं चित्र मन्य द्विचित्रं यद्वै स्वस्यापि-
धातापिदधदुलगवा मष्टकं स्पष्टकम्पम् ॥ भीत्युत्थं वृन्द भावा-
न्निपुण मितरथा दर्शयन्दृष्टरूपं दण्डेया स्मी त्येव दण्डा क्लीतिनुतिक
रणात्सूचयन्कृष्णमस्तौत् ॥३७॥ वेधा वेधादिव बलजगत्स-
र्जनाधः परागान्मन्ये सर्वाप्यसुपरिहरा धिक्रियाधिक्रियेव ॥ मे
धां मेधावलिनतु लतान्यत्र यत्तादृशीमप्याराच्छाभां निम्नगुरुहृदि

स्यवत्स्य वान्व्यक्त वासाम् ॥ ३८ ॥ सत्याद्यापलित: सुदृष्ट महिमा

सत्यान्त्सवत्सान्त्सखीन्पत्सासंगमयंश्छिय: पुनरसा वत्सादेरणा

त्समभू: ॥ गत्यातस्य पवित्रितां व्रजभुवं रत्यास्वदं वर्णयन्प्रत्यास्त:

प्रकृतिं ददावथ निजैर्न्दृत्याय पाथाञ्जलिम् ॥ ३९ ॥ निकुञ्ज पु-

ञ्ज गुञ्ज दुन्मदालिभि: स्वनायक भ्रमादि बाधि वेष्टित: सबर्हि बर्ह-

शेखर: ॥ सुहृद्बलो यथा वने ननन्द नन्द नन्दनस्तथा प्रभुर्न स्व:पदे १५

नपञ्च चामरोपिवा ॥ ४० ॥ शैलवयावा कान्दुका वा सह सुहृदसुभि:

दोपावसाचा
खेळ

किञ्च गोष्ठ्याम्बराया क्रीडभूध्यम्रकाले क्वचन किल बलश्रीशयोः का
ननेषु ॥ स्वर्गस्त्रीपुंसकानां विवशितमनसामप्यनंगोग्रबाणैः संपूर्णा
लम्भनाभूत्तदुपस्थलियुजां कौसुमापालुकावा ॥ ४१ ॥ दौष्कम्योत्म
विशान्तमुन्मदमधो भूलं तदंध्रं तमः स्वर्गापेवहठान्महीरुहतले स्व
ध्वं क्षिपन्धेनुकम् ॥ तालांकं कोहिलदर्शनो निपतता न्तद्रुक्षभारा
त्ध्वानैं तालानां पुनरुक्तयन्त्सवयसां रत्याणि लोके बभौ ॥ ४२ ॥ आ
गोपापिपनीराऽजनितपनसुतायाभुजंगानुषंगान्मुञ्चन्तीजीवनं

द्रागवनतविषयेतद्विशुद्धिं चिकीर्षुः ॥ कृष्णः कृच्छ्रातिकृच्छ्रोपचय
मुचितमारोपयन्तत्तटस्थान्प्रायश्चित्तेन तेषां सपदि परिहरन्किन्तु सा
न्निध्यदोषम् ॥ ४३ ॥ विषमे पतनाय जायते खलसङ्गः क्षणिकः सता
मपि ॥ न्यपतद्धि कदंबसंश्रितः प्रभुरायामिनिया मुनेर्हदे ॥ ४४ ॥
भोगिस्वभानुग्रस्तं हृदयगततमस्तस्करा हस्करं प्राग्बाल्यादाच-
व्यद्धा दूरजवसतिजुषश्चापशोकोद्भ्यसर्वे ॥ कृष्णं त्यक्तान्नपानाः
प्रविलपनसरित्संगतैगाढमग्नाः कालिन्दीदिव्यतीर्थे व्यवसित १६

मलयः स्वसुदानेष्वभूवन् ॥ ४५ ॥ सदंबुरुड्ढिकर्तनः सुरद्विषद्विक-
र्तनः शतं फणा विमर्दयन्नहे मंदोच्छ्रिता भृशम् ॥ ननर्त नर्तनप्रियो
यदा तदानुवर्तनं मृदंगगोमुखानकैः प्रचक्रुरप्सरोगणाः ॥ ४६ ॥
बाढं हठेन विफलीकृतसत्सुपर्णप्राज्यागमं वनविदूषकमाश्रयाशम् ॥
एकं द्विजिह्वमपरं च सहस्रजिह्वं मुख्यां स्थितिं समनयद्विभुरेकका-
लम् ॥ ४७ ॥ शब्दाश्रितेन द्विजसंगतेन नक्षत्रयुक्तेन गतार्यभासा ॥
संयोजितोऽभूदमुना मुखेन यच्छिन्नभानुः किमु नाहमेतत् ॥ ४८ ॥

गीर्वाणहृद्यमध्यानं मदविकलतया नष्टदृष्टिं प्रलंबं प्रत्यारूढः पृदाकु
प्रवर तनुतया पादहीनो बलाख्यः ॥ विद्वन्मान्यः पुमान्यो व्यसनमुप
गतो विस्मृतात्मावबोधो हत्वेषोऽमुच्यतास्मात्सपदि विधिगुरोः
सन्निधौ सद्विवेकात् ॥ ४९ ॥ सगवेच सवत्साय सहलाय बलायते ॥
स्वस्तिरस्तात्सह कृष्णाय सह गोपाय सर्वतः ॥ ५० ॥ इत्याशिषः
प्रयुंजाना मुनयोऽनुनयोक्तिभिः ॥ प्रशशंसुश्च तं गोपाः साधुसाधि
ति वादिनः ॥ ५१ ॥ गोपालानां कदाचिद्वनमधिवसतां धीमतां रत्न-

इषीका = Rush = जोरदार

गावः सञ्चोले वृत्तयस्ता विषयतृणरसाद् दूरं कर्ममार्गम् ॥ ऐषीकं-
संप्रविष्टास्तदुदितमनलं शोकमासाद्य भीता नीताः स्वाहं ममत्वाक्ष्य
पलपनपुञ्जां कृष्णबोधेन सौस्थ्यम् ॥ ५२ ॥ अपि स्वल्पमभ्यन्तरेऽप-
न्निधातुं दवाग्निं जगत्तापकं नापकम्पम् ॥ नतोऽस्मि तं तातरिम दण्डाय
मानं ऋषिचण्डाय चण्डाय तस्मै वदामि ॥ ५३ ॥ सरन्ध्रोऽपि वंशोऽन्वंशो
भमानं यशः किं वशः कं जनाः भस्य भूत्वा ॥ प्रलेभे द्वयं यद्वपं तन्न वि
मः कियद्वेति तद्वेत्ति सर्वज्ञ एव ॥ ५४ ॥ अनुपरम्य मुखेन करेण च स्व

X Embraced

वराकीचकरन्ध्रपिधानकृत् ॥ हरिरस्तु च यदाश्रितदुष्कृतिप्रसर-
Denial
निह्नवचिन्हमिहाद्भुतम् ॥५५॥ कृत्वा मूर्तिं मृड मृगदृशः सैकतीं नै-
कतीर्थैः संश्लिष्टायां स्वसरिशमनस्या प्लुता मासमेकम् ॥ आन- Injured mind
र्चुस्त्वा व्रजपतिसुतं भर्तृभावेन लब्धुं गोधुक्कन्याः प्रतिपदलस
अत्यंत = अतिशय
त्प्रेमभक्तिप्रकर्षाः ॥५६॥ अनुग्रहे विश्रहति स्वभावः समेत्य नत
प्रार्णवजार्चितांघ्रिः ॥ विलोक्य तां सांलदभावमीशो जहार तीराद्
बलन्वीरसंघम् ॥५७॥ भक्तानुग्रहतोऽपि पूर्वमशुचींस्त्वसंगिनो वा

ज्या कृ ण च्या प्रकार च्या असतील त्या नां

शुचीर्द्दीनानाथ दयाब्धिरुद्गमयते यादृक्तनादृक्षकान् ॥ स्नातीनां जल
मस्पृशन्त्यपि यतो वासांसि तासांसि ल श्यामारक्तकपीत कर्बुररुचीन्यादा
वधतां स यः ॥ ५८ ॥ विष्णोः पदेन समितं त्वधिरुह्य मध्यं शारत्सूर्ध्व दे
शकलनेन समुच्छ्रितस्य ॥ तस्यैव तं समभजन्त्खदृशां पदै घा अध्यास्ते
द्विगुणिनः पदमुच्च मुच्चम् ॥ ५९ ॥ एष्यद्दूर्णानं तरतु क्षपासु वाञ्छापूर्त्तौ
जातशंका इवाभूः ॥ स्वं स्वं नेत्रं कृष्णनेत्रद्वयेन साकं बद्ध्वा व्यूढ मध्यस्य
भावम् ॥ ६० ॥ आसन्गुणेश्च नियमैश्च यमैश्च जात्या नात्याहृता अपि

seizing

not very careful

परं व्रजगोपकन्याः ॥ दुःखाब्दखण्डपरिखण्डनचण्डवात्या कात्याय-
नीचरणपूजनपूर्णकामाः ॥ ६१ ॥ मदं बहूनां निजधन्यतागुणात्स्वदं-
बधुर्यो यदपाहरत्ततः ॥ सदं बतां द्राग्भजतां क्षुधं न्नवासदम्बरैर्भूषय-
न्तिस्म यं विभुः ॥ ६२ ॥ क्षुधार्तान्सखीन्दूरमागत्य खिन्नान्प्रभुः प्रेष-
यामास यज्ञाश्रमासन्नस्थाम् ॥ कृतो विप्रपंक्तिं प्रति स्त्रीभिरस्यादेदस्वन्न
मागत्य गत्यर्थिनीभिः ॥ ६३ ॥ तत्पत्युनूनापकृन्तोहठेन त्वाः प्रास्थापय
यन्नसदः पतिव्रताः ॥ श्रीमान्त्सवैकुण्ठपदे गरस्थ बल्कि न्दम्पति ब्राह्मण ११

सत्क्रियाभिकः ॥ ६४ ॥ संपश्यतः स्वमनिमेषयतैव देवान्गन्धेन गंधन
यतोऽप्यमृतस्य तृप्तान् ॥ पुष्णन्कदुष्णविविधान्नचये न तेन गोपा
न्सान्त्स बुभुजे सबलो धराङ्गः ॥ ६५ ॥ या गह्वध्वंसरुषा वृषा प्रविद
धन्मध्येवजं सागरं तं चैवोज्झितमध्यमाक्षरमरं लोके तदा दर्शयत् ॥
गोविन्दोऽप्यनुमाति बंधुरकरोल्लुतान्यवर्णकरं किंचित्तं प्रभुराद्यवर्णर-
हितं कुर्याद्यदेतं बुधाः ॥ ६६ ॥ गूढयन्गोत्रभिद्गर्वं गोवर्धनगिरिमु-
हरन् ॥ गोविन्दोऽङ्गयुगुणभृङ्गो पाययामास गोगणम् ॥ ६७ ॥ पदेनि-

धायस्व करे शलाटमन्यपत्न संपन्नमहाभिषेकम् ।। मन्ये गिरिन्त्रमु
डुमप्यधीशः प्राग्निक्षिपत्स्वः पदमिन्द्रकोपात् ।। ६८ ।। उदाराधिका-
रोऽथ भगवानतिरेकात्सुपुण्यस्य हानावबरखोपभोग्यात् ।। तमो दुर्दरास
* रवी चादांश व्रजक्ष्मादरोयं सुखायेति मत्वैवं शैलो निवृत्तः ।। ६९ ।। सत्पूज्योन्द्रति मोदांशकांवे
कालयोर्निजतनुं मंथानगोवर्धनस्योर्ध्वोधः स्थलयोर्दधत्स्वकुशलं आत्मानंद रूपी अमृतो
यत्रोज्जहाराम्रलम ।। लेशं चापि विषस्य यत्र नहरेः कर्मौ चकारा ऽ
सुरद्विड्वर्गो बुधिमंथनं स भगवाननन्यादृशं तद्दधात ।। ७० ।। २०

strange or unusual

× लज्जितो व कलुषित सुख दारखविध्या-च्या ह्रतो

Loss of Patience

सद्याहानल्पकल्पक्षयपटुकटुवागभ्रजादभ्रवर्षामर्षाभावेक
तर्षप्रशमनविधये किंयुतः कामधेन्वा ॥ त्वं चिन्तारत्नकल्पद्रुमसु
रसुरभिस्त्विष्टदं देवदेवं मुधा नान्याद्रिमन्तुर्गुरुरिव विबुधाधीश्वरोऽप्या — मंत्र = उपदेश
जगाम ॥७१॥ उरुमंद मंदाक्ष नम्रो ममास्य व्यचीकृतो शंकितह
दसशङ्कः ॥ श्रीकृष्णपादाम्बुजयोः प्रणामोदकांत्रियां अर्थक
रिं व्यधत्त ॥७२॥ स्वर्धुन्या नित्ययोगाद्बहिरपि च शुचीभूतदेहे
नन्नूनं दिव्यान्दत्वान्सुमर्थाा निव किल चतुरो विभ्रमाऽभ्रद्विपेन ॥

शुण्डादण्डेन तस्याः कुलमिह पयसा म्याहतेनाम्बुजाक्षं पूरेणारात्सु
रेशः सुरभिरपि पन्निजिनोऽधसेनाभ्यषिंचत् ॥ ७३ ॥ विभुंस्तावं स्तावं-
गणतजनवात्सल्यजलधिं सरस्त्वादक्षिभ्यो मुहुरमितमोदाम्बुल
हरीः ॥ स्तजन्भूयोप्यस्माभिभृतमयमाप्लावयति विलसमन्दङ्गोपा
लान्हृदि विकलयन्नाप सद्दिवम् ॥ ७४ ॥ कारुण्यासेव पेवभ्रममम
धिहृदयं बिभ्रदंभोविहारी किं वो दृष्यद्विवस्वद्भयश्चकित तमोराशिभृ
त्पातिभृत्यः ॥ धर्मान्विष्णो रज्ञानन्ननयत सविधं स्वामिनः स्वामि

खेय = Ditch, moat

नोपि भ्रान्तिं खेयस्य भीत्या वहन्निर्निशि नन्दाङ्कं तत्तस्यापि तातम् ॥७५॥
गत्वाथो वरुणालयं सकरुणः स्वाराज्यसम्राडपि प्राग्दृभ्यामरुणाधि
तस्वमखिलं विस्फारिताभ्यां रुषा ॥ कृत्वा तज्जनतां स स्वजनकं
पूजां च संगृह्य वै प्राप्तः सन्व्रजमुच्चकै रमदयद्गोपालभूपालभूः ॥७६॥
ज्ञानी मः पक्षपातं मधुकुकुरदशार्हैभोजान्धकेभ्यो गोधुक्षु श्री
निवासोऽधिकमतनुत यन्नेजमेवार्यमेतान् ॥ सर्वानेकं श्वफल्कात्म अक्रूर
जमथ निरघं दर्शयामास तेषां किंचैकं वर्षमेषामभजत स्दनं तस्य या

× चुंबन घेतै असतांच्या चन्द्राचा मैं थार [illegible]

मान्दुमान्नम् ॥ ७ ॥ उक्तो सा द्वितीयः ॥ कलित ललितवंशी दि-
व्यशक्तिप्रपन्नं गहन गति महानी पुजनो धैरचिन्त्यैः ॥ व्रजयुवति
सुपुण्यैरुद्घृतं प्राग्वदासीच्चरादि बहुलरूपे क्रीडितुं ब्रह्मपूर्णम् ॥ १ ॥ अ
शंकं चुम्बन्तं सपदि मुखमेन्द्वा अपि दिशो निशानाथं स्वीयान्वयपुरु-
×Considering ष मारक्त मनघः ॥ विमृश्येवानुज्ञामप्रतिददत मात्मानमपि स प्रभुस्ता
दृक्कर्मण्यपर इव हृष्यन्प्रववृते ॥ २ ॥ समानेतुं गोपीर्विशदयमुनाती
रमजितः स्ववंशीं सद्गीतामिव मधुर मध्यापिपदरम् ॥ स्वराङ्गपंक्तौ

पि प्रखरगरलादग्ध इव यद्भुजङ्गास्यान्निर्यत्स्मरमनु तदाऽमूर्छयदि
मा: ॥३॥ हरहृगनलप्लुष्टोऽनङ्गः पुनस्तनुलिप्सया ननु भगवतः कु-
क्षिं भेजे ति सूक्ष्मतये इयः ॥ सुमन इषवस्तस्योच्छ्वासैः सुवेणुग
तैर्हरेर्बहिरूपगता नालीक त्वं स्फुटं कितव लं ~~बधिरे~~ ॥४॥ चिरं निगूढं बत
कुसुमेषुमतं स्फुलिंगदेश्यं हृदयेषु तासाम् ॥ वंशीधमन्युद्धृतगीत
दीर्घोच्छ्वासैरिवाबधयदब्जनाभः ॥५॥ स्मराग्निः प्रादीपि द्रुतमज
नि पीडा खलु लता न कापि व्यापारं स्फुटमपि तदा बोधि रमणी ॥६

अपूर्यस्तं प्रीत्या सपदि नयने कस्य न यदा स्वैरं वंशी स्रातार्ध्यानि मधु
रमप्यायि च भृशम् ॥ ६ ॥ नेकेवलं स्वं स्वमहार्यि गेहं वनाय गोपीभि
रलक्षिताभिः ॥ किं खेलदंगाभरणैरपीह कुर्वद्भिरन्योन्यपदावलम्बम् ॥ ७ ॥
सर्पादि विभुना तासामूरूपि च षण्डमथोपदे गतिमनुकर्तुं नेत्रे नासां कच्यानपि
परपत्ता ॥ विधुधवलितरंभाऽऽबोधिस्थला जन्यचयो वने गज मृगपत्नीन्यंकुः
कीरस्थमर्पापि शंकिताः ॥ ८ ॥ क्षाराद्बुनिधेः पयांसि मधुराण्यप्राप्य तस्या
बलां कालिन्दीमनुयाचितुं कूलधियस्तायज्ञपत्नीर्न्नयम् ॥ द्दष्टे कोपग

तस्य सञ्जलमुचः शंकां समुत्पादयन्नेमे श्रीरमण्याश्चिराय रुचिरं लाभि

स्तोडहौत्तिभिः ॥९॥ मुमुक्षूणां मोक्षः करगत इवाहं कृतिजुषां प्रमत्ता

placed hidden नामुच्चैर्निभृतमधनानामिव निधिः । प्रकाशो दृष्टीनामिव भृशमपथ्या

पितहृदा वर्जिहानां तासां विभुरपि बतान्तर्धिमगमत् ॥१०॥ प्रत्यक्षादि

ष्वयं यत्पदयुगपदवीं न स्पृशत्येष गम्यो द्रागेकेनागमेन क्षणमपि कलिले

नापि दृग्भ्यांश्च नूनम् । तस्याभिख्यां दधानान् द्रुमवरनिचयांस्ता दृशू

ति मुमुख्यान्यूर्णं ब्रजन्त्यभ्यपृच्छन् प्रतिपदमबला हन्त विभ्रान्तचित्ताः ॥११॥

अहं मानेशान्ते परिचित दिशान्ते न विभुना ज्झितानां गोपीनां रुचिरघटत
पीनां तरुजाम् । अपूर्व श्री धामा तिगलितरु धामा दृश गिरां विरेजे का
लिन्दी तटमथ मिलिन्दीकृतमिव ॥१३॥ यां गोपी मनयद्रहः प्रभुरयं-
सापि स्वयं सम्मुखं पृष्ठारोहण त्वरा ऽनभिमुखं संपादयन्ती हठात् ।
दूरादच्युत विच्युता श्रुसलिलै र्निम्नानुगैर्दर्शितिप्रान्ते यामुनकैरुदोदमि
लिता पूर्वै र्ज्झिताभिः पुनः ॥१२॥ तस्याः पुलिने ऽमलिने नलिनेक्षण-
चिन्तया विगतनिद्राः । विद्रावणाय विरहव्याधेश्चेष्टां तदा हन्तां जगृहुः ॥१४॥

in his honour

कालं प्रभूतमिति तत्र सविभ्रमं भास्वादं प्रदाय विशदायतलोचनाभ्यः ॥
संभोगकं रसयितुं रसमुत्सुकास्ता स्तेनैव संमदयितुं ध्रुवमाविरासीत्
॥३५॥ कालिन्दीतटकुंजपुंजकुहरे स्वच्छन्दखेलज्जगत्प्राणायामव
शो वियोग विपदां तासां ससाधिं वहन् ॥ प्रत्याहारपरः सतत्र सुदृशा
मात्तोत्तरीयासनो भोगी किंचन सहाधस्य समवध्यातापि योगीव
भौ ॥३६॥ काचिद्गोपवधूश्चुचुम्बवदनं काचित्करावग्रहीत् संक्री
डत्स्वमेयेक सार्धमिलिकाप्याक्षिप्य कर्णे जपन् ॥ पंके काचिदुवाह

इंद्रिय निग्रह करणारा

उत्तरीय आसन त करणारा

पाद युगलं काचिद्धने त्र्यान्तिके तस्थौ बहुलालदक्षन वृत्तिभिरविरते
ताभिरावेष्टितम् ॥१७॥ हासयन्ति बहुशः स्मिता विभुं यासयन्ति
बत वासयन्ति तम् ॥ वीक्ष्य सिद्धि निर्वहै रभिष्टुता श्री हरेः स्वपद-
भक्त वरयता ॥१८॥ कुम्पन्तो भिरनुक्षण न्निजभुजाकं पैक स-
ल्लीलया मल्लीमुख्य मेहन्द्रकानन ऊसद्वल्ली विलासच्छटाम् ॥
मल्लीभिः स्मर सद्गुटस्य सुचिरं हृष्टैव तल्लीन ताम् स्वास्मिन्संदधती
भिराभिरलनो साकं सहल्लीसकं ॥१९॥ रासोत्सवे भगवतो नवतो



Circular dancing

अन्वहं = रोज, प्रत्येक दिन ही

षदायिन्याकाशयायिभिरलं मिथुनैः सुराणाम् ॥ नृत्यद्भिरुन्नतपदं गमि
तेक्षितदेशे धान्नाऽपिलानि मिषतेव निजान्वगायि ॥ २० ॥ ताः सप्तविंशति
भासा मिता वनिता नितान्तं तातोऽन्वहं परिवहन्नहमस्मि नूनम् ॥ महंशाज-
स्त्वयमभूष्व मितासुसत्कः श्रान्तोऽपि नेति शशभृद्धृदि विस्मितोऽभूत्
॥ २१ ॥ द्विगुणां दधतीमगाधतां स्थलकेलिश्रमधर्मवारिणा ॥ अव-
तीर्यततः कलिन्दजां सह कृष्णेन विजह्रुरंगनाः ॥ २२ ॥ यात्राया
मंबिम्बायां वृषहृदयदुहां गोदुहां कश्च नाहि नंदं सानन्दमेव प्रमुदि

तस्तनस्तामग्रसिष्टाग्रसीम्नाम् ॥ ह्रीकारुण्यक्षमाणामथविधिगुरु-
णाज्ञातपि श्रींघ्रिकंजस्पर्शात्तस्यापिविद्याधरवरपदवीनेदवीयस्य दूरा
कारि ॥२३॥ सौभाग्यांकितशंखचूडसदृशं गोपीकरस्पर्शनं वांछं-
तं विनिहत्य दुष्टमनसं तं शंखचूडं विभुः ॥ भोगीन्द्रस्य फणासहस्रवि-
लसद्रत्नस्य मूर्त्यैमणिं भ्रात्रे दाद्दिहतद्विहीनशिरसे प्रीत्यैबलन्मूर्ध्व-
गम् ॥२४॥ वामाक्षीर्नवगर्भसंभवजुषः स्वल्पैरहोभिर्मुदारि-
ष्टं योगमयन्कुमारमुखतो मिषंपराबलेयन् ॥ गर्जन्मेघइवाव्रजव्रज २८
के

मुवं तस्याप्यरिष्टस्य सत्सर्वारिष्ट निवारणे। प्यमदय कृष्णेरारिष्टा
वलिम् ॥२५॥ यन्नादे मृत्यु भीत्या त्रिगुण यतितरा मङ्क्षु गुप्य-
त्सुकेशी सीमन्ते मौक्तिकालिं बलनयन युगा दस्त्रबिन्दून्समुञ्च
न् ॥ धैर्याहंकार पेशी निखिल सुर गणः सोप्याहं दुर्निदेशी-
केशी दैत्योऽवकेशी समजनि कुमतेः कल्पशाखी वमान्यः ॥२६॥
व्योमाङ्गजो बलमयस्य पितेव नृणामाङ्पूर्वकोथ भयक्लृप्तपरीत-
नामा ॥ विश्वात्मनो गिरिदरीमनयद्ध्रुयस्यानेतं सचोदर दरीसह

तदा देशयोः वधाय अक्रूरोपायं अकृत।

सेवमृत्योः ॥२७॥ यदतनुतनोः संसर्गेण क्षतायत कोटिना
स्थितमशनिना डिंडीरेणाप्यसौ नमुचिर्हतः ॥ इति नुचरितं स्मृ-
त्वा कंसः पुरासुरजन्मभाक् चरममकृता क्रूरोपायं वधाय त-
देशयोः ॥२८॥ राज्ञा कृतां कुमतिना बहुदुष्कराज्ञामादाय भा
रमिव नम्रशिराश्चिराय ॥ प्राज्ञानुवर्णितगुणः स बभूव किं वा
ताहेक्लिकयो परतसज्जनतज्जयैव ॥२९॥ श्रीकृष्णसंमान
नगोचराः पथो व्यभ्रंशयन्यं शततशो मनोरथाः ॥ एकः कथं तं बत

सत्पथप्रियं मार्गेण वृष्णिप्रवरं नयेद्रथः ३० कुर्यां कथं निखिल

कृष्णाला घेऊन जा न्या न्या

गोष्ठबहिश्चरास्तु कृष्णापसारणविधिं प्रकटं दिवैव ॥ इत्थं-

छिपविणे

विविच्य निजदुष्कृति निह्नवेच्छुः शंकेगवां स समंजन तिरो

झुंड, कळप

हितोभवत ३१ सत्त्वंप्रशस्तमपिधिङ्‌ मुरभिद्वियुक्तं नित्यंन-

मोस्तु रजसेपि तदंघ्रिभाजे ॥ इत्थं ब्रुवन्ननु पदं विरजोमुकुन्द-

पादाब्जरंजितरजः सुभृशं लुलोठ ३२ गोविन्द दर्शन महोत्सव

मग्नचेता आनंदनीरभरनिर्भरघूर्णिताक्षः ॥ गोपीसुदिष्ट- आनंदाश्रू

moving to & fro

MIL shows honour

बहिरुज्झितदूनदून दुर्दैव दर्शित दिशा(?)सन्निवेश गोष्ठम ३३ सुधा

महाराजाज्ञ निष्कुट

मयं नन्दनरत्नरम्यं संराजितं निष्कुटगाप्सरोभिः ॥ भूस्थं गुरुः उपवन

स्वर्गमिवातिपुण्यो नंदस्य सानन्दमगादगारम् ३४ स्वीकृत्य

नंदबलभद्र सुभद्र पादैर्दत्ता मनोरथशताधिक सत्क्रियास्ताः

॥ पर्यंकमेव नहि किन्तु भवांबुराशेस्तल्पं ह्यमप्ययमसेवत वृ

ष्णिवर्य्यः ३५ लेभ्यः स्पष्ट कुशलः परिहृष्टचेता मार्गमनोरथ

शतैर्ननु हा पतन्तैः ॥ भोजेन्द्र दुर्विधिसमीरणलोनुवृत्तं शशं वृत्तं २८

ननु * निस्तारे

स्तनिखिलं निजदूत्यगर्भम ३६ पुर्यां शरासनमखोत्सव दर्शनाय क्ष
त्राज्ञया व्रजपते: पटहोथतत्र ७५ आघोषित: प्रतिगृहं नवदुर्विलाप
स्वाध्यायदेशिक इवाभवदंगनानाम ३७ दोषांधकागमनहेतु विदा
विदोषा योषा व्रजस्थिति भृतो निर्भृतास्थितानाम ७५ गंतुं बहिर्नि
पमनायनु हघस्त्रनां चिंतामुपयंति भरां बिभराम्ब भूवु: ३८ मूर्ध
स्व्याहिल संभृतामृत घटा: स्नातोद्धृता यमुनाह्वार: किं चतदूर्मिल: प-
रिचिताहंपूर्विका संभ्रमा: ७५ कर्तुं केशव मात्मसादति तरा मुद्यागिन
गांदिनी सूनुं विघ्नयितुं ययु: स्तनधिया गोप्यो नता: सिध्दय: ३९

जप

आर्हत = Place

full

धारणा कृत्या प्राप्ता

वश्य प्रणयो
निश्चल

कलह = war of words

ताः संघर्षाथ मिलिता गलिता हठेन स्मेरेण षंढतिलितालमकुलादिल

ज्ञाः ॥ सज्जा निवारयितुमीश्वरमिन्दिरायाः स्वच्छंद कंदलदमंदग

राजजल्पुः ॥ ४० ॥ भोधातः किमिदं विचित्रमिह यज्ञान्मार्पितं नोव्र

जेस्त्रीत्वं लग्नश्च नन्द नन्दन पदासक्तिस्तथान्यादृशी ॥ किंच्यायं विर

होधुनाथ च बलादायुर्वृथा पोषितं किंवाच्यं न पितामहेहगुचितं केशैः

शिरः कर्तनम् ॥ ४१ ॥ यासां मासाद्य दोहस्थलमपि च महत्पात्रमापूर्य मात्रा

धिक्षिप्तोपि नित्यं सकपट रुदितं द्राक्षणे हत्य दुग्धम् ॥ यावत्पर्याप्य पास्त्वं स

कथमिह हठाभर्त्सिरेताः स्वधेनूः पीनोध्नी र्हा जिहासन्न घृण इव विभोयाहि- २९

उग्र violent

to drink to one's satisfaction

अशा गाई ती सोडून जाण्याची इच्छा करतो

गोष्ठश्वा = गाईंच्या कळपातला कुत्रा

याहीति यासि ॥ ४२ ॥ गोष्ठश्वैः सहपरस्य धन्वनुडहाना क्रोशान्बद्धादरान्नैवा
क्षि भुवनर्तनं विदधति नक्तं दिवं सारिकाः ॥ जाता न्क्रूर मुकुंदमर्पय सखे चे
लं चलैः प्रार्थ्यते सर्वो सां पुरुषायुषं भवतु तेन आयुष न्त्यायुषम् ॥ ४३ ॥
दध्येङ्ग हास्थिशं बागदतर दिह परप्राणलोपक्रियायै चास्यादिन्द्रो मुकुन्दो त्व
द्विरह शताघातलो प्यक्षतानि ॥ तीक्ष्णं वज्रं विधित्सुर्यदि हृदयगतास्थ्या
नियाचित तस्मै संदास्मा मूर्ति मोदे महि नहि शुभदा या सुधा स्वात्महत्या ॥ ४४ ॥ वृथा
इत्यादिभाषणपरानपरान्पुरस्ताद्बध्वा न्पतीनपि निरोध्दुमुपागतान्स्वात् .
॥ गोप्यो विदुः परमनिवमिममाविलापं गोविन्द माधव मुकुन्द जनार्दनेति ॥ ४५ ॥

× हीनक: = miserable, low = नीच.

योयं व्रजप्राणहरोन्धकाग्र्यः कृष्णाननस्ताधलकश्चिराय ॥ एतान्दुरुक्तिं
व्रजसुन्दरीणां माशीर्विधिं निन्दपवत्समेने ॥ ४६ ॥ ताभिदृढं साश्रुनशो
कवाभिः श्यामी कृता जह्नुसुता सपत्नी ॥ ईदृग्विभोस्वरशोचिषोपिक
न्यातिधन्या कथमन्यथैषा ४७ ॥ यदि मणिरिवाभक्ता यापि प्रसह्य विव
स्वताति न रथवहावाहाः सूतोप्यनुसूरदास्यत ॥ यदपि च रथे योऽक्ष्यन्तास्मिं
स्तथाप्यबलागणोहृदि यदि रूषाधास्यद्धादं तदैनमरोत्स्यत ॥ ४८ ॥ श्रीकृ
ष्णे सबले व्रजात्प्रचलिते गोपाङ्गनाः स्यंदने स्वां दृष्टिं निदधुस्ततः परमरं केतोत
दूर्ध्वेक्षणात ॥ रेणोर्दुःखमहाब्धिशोषण कृते सोप्यस्तपूरांतरे पंकीभूयदृढं 30

रवि-च्या प्रखर प्रकाशा-नी

न्यमञ्जयदिमाहा हन्त हन्त्याबला: ॥४९॥ तदनु सुदृशां भूमेरंश: पलाशप्रलयं गतो
नयनयुगलादंभस्तेजो मुखादपि चानिल: ॥ हृदयसदनाद्यालं चक्रु: सहैव सुनिश्च
यं ध्रुवमभिभुतास्थातुं भूतैश्चतुर्भिरदर्शि सा ॥५०॥ तं स्वर्द्रुपल्लवमणप्रतिमक्कु
वर्यपादं निधाय हृदि बल्लवमुग्धवध्व: ॥ शीतोष्णवालजनिपल्लवभावनाया
ऽनुत्फुल्लगल्लवदना: सदनानि जग्मु: ॥५१॥ उल्लासस्तृतीय: ॥३॥ अथ
निनाय विनाय दुस्तमोनुमतिमर्कसुतां प्रमदालते: ॥ कलहरीतिभया
दिवसत्वरं बलहरी ऊहरी शतशोभितयाम ॥१॥ अकठिन: सतदस्व घमर्षणं
व्यधित तौ तु हलायुधचक्रिणौ ॥ कुमतिमन्त्रकलेन यतः पुरीं रथगतावपि चक्र

गण

अंकुरित भावना

गाल (cheek)

तुरस्य नाम ॥ २ ॥ जलस्थौ रथस्थौ समं वीक्ष्य देवौ श्वफल्कांगभूरंगभूः कर्म्मलक्ष्याः
नवै केवलं भानुकन्याकबन्धे प्रबन्धेपि शंकाशतानां ममज्ञ ॥ ३ ॥ दृष्टैश्वर्यौ वील
शंकस्तयोस्तत्स्वः सोपानस्यंदनं भिभमाद्यम् ॥ आरूढोसौ पुण्यवान्प्राप सद्यो
देवोद्यानं पत्तनोद्यानरूपम् ॥ ४ ॥ तत्पूर्वमेव शकटैः सह गोरसाद्यैः प्राप स्थलं-
निजजनैश्च तदैव नन्दः ॥ तस्मादपि प्रथममल्पितनाकिपौरः स्वांतांतरण्यविश
दाङ्‌ सहितः स एव ॥ ५ ॥ अभ्रासः कृतकृत्यतामिलितस्वज्ञातिरथद्वयोरेकेना
पि न संगतोस्मि सुमतेहमतोध्ववेदेशः ॥ आगच्छ धामनि निरुध्द वः कथमतो
गेहं निजं क्षम्यतां स्वल्पङ्कालमिति ब्रुवन्प्रभुवरो क्रूरं पुरः प्राहिणोत् ॥ ६ ॥ आ- ३१

Plan = Scheme = योजना

कर्तव्य कर्म पालयाना

स्वांत = mind cavern

वायकः = weaver = कोष्टी

विदुः = ...

शिक्तुः सकपट मनुजो हासयत्यंबुजाक्षीः ॥१०॥ तेरंबेरे वायकेतो विचित्रैरविं-
दलां वेषमशेषकात्स्न्यम् ॥ श्रीरामकृष्णौ सचलध्वमूभ्यां श्रयंश्च सारूप्यमिहस्मृ-
तिंच ॥११॥ श्रीकृष्णः सस्कहृद्रजन्सुमनसान्दाम्नास्कदाम्नांचितः कुब्जासं-
गतिकामुको वरमिषात्तत्सौमनस्याख्यताम् ॥ आक्ष्य श्रीरमणी न्तदीयनिलये
विन्यासतत्काङ्गनुज्ञात्वा सौहृदयस्थया बततयांचैकेपि निस्स्वीकृतः ॥१२॥
रम्यं रूपं पयासो वरद वर विभुर्गंधमात्रेण तुष्यन्मार्गे संयच्छते स्म त्रिपदकुटिलयानहं-
याकं सदास्या ॥ दृष्ट्वा तां विस्मितोभूदविदित विलसत्तादृभक्तिप्रकारो गन्धाम्भोलो-
कस्त्रलीयामिव सपदि चतुर्थ्यर्थहेतोः प्रयुक्ताम् ॥१३॥ प्रारब्धत्तासहादिनवर्षे

माल, हार

32

Promise = प्रतिज्ञा

सहायलाभार्गेन्द्रं विशङ्कस्य सुमहन्तनु चित्रवर्णम् ॥ कंसस्य कंजनयनो धनुरूढ
रोषो मध्ये सभं जनसमक्षमसौ बभञ्ज ॥१४॥ देवानां वषडाहुतिर्द्विजनुषां स-
ध्यां ति पाठो पुमो दूरेऽपि प्रियसंगरस्य चमुनेः सङ्ग॥ मठ ध्वा स्वनः ॥ वृष्णीनां जय
त्ति
दुन्दुभिध्वनिभः शब्दो धनुर्भङ्गभूः कंसस्यापि बभूव कालमहिषग्रैवेय घण्टारवः
॥१५॥ ऐक्षिष्ट प्रतिबिंबितं न मुकुरे नोदंचने बामु स्वं दुर्धीश्च ग्च्छल जीवितो निशि
दिवा स्वापञ्च न प्रापयः ॥ भेजे कञ्चन मञ्च मञ्चलगतम्मूर्तं यशः सञ्चय-
ञ्चक्षोल्वणं स लुवञ्चयन्कुपुरुषान्भूषो ञ्चोपैरञ्चयन् ॥१६॥ मुधुर्द्विषिणा क्रा प्रा
मधुकोलिनादो दिवो भोजराजस्य यात्रा सवाय ॥ द्रुतं केशराजीवदाजी वनाति

स्वानाकः सत्यलोकोपि दूरे वैकुण्ठोऽव्ष्णिपुर्यान साम्ये ॥ तस्यापीशः श्रीधरो
सोऽपदस्याः शोभां दृष्टुं दत्तचक्षुर्बभूव ॥ ७ ॥ तदा स्वर्यपश्या अपि नगर नार्यः ख
लु विभोर्दिदृक्षैकव्याजादकरुणललाटंतपरवेः ॥ उदग्रं संतापं शमयितुमिवोन्निद्र
वदनैर्दिवा हर्म्यारूढा न्यधिषत वियन्नैकहिमगु ॥ ८ ॥ पटमिव परस्याः सौधं योविधा
य मनोमलं न किल रजकोऽभत्स्या वर्णैरिवारमरञ्जयत ॥ वसनघटितान्कोशानस्या
परानपि संस्तृते निवरणपटून्पञ्चाहार्षीत्स लत्स्मरवाच्युतः ॥ ९ ॥ विहद्बन्धोपि
कव्या उपरितनमधो बिभ्रदूर्ध्वं त्वधस्थं तस्याः संवेष्टनार्हं पटमपि च शरत्स्नाणम
न्योन्यदेशे ॥ तादृक्षेभ्यो दिदृक्षा कुतुकसमुदितात्संभ्रमादागतेभ्यः पौरेभ्यो लब्ध

मदानेन चक्रे द्विपेन्द्रोऽपि सञ्ज्ञः ॥ १७ ॥ सितपीतकौशिककाक्षः कीन्द्रदायु

धो विहसन परोमित्रैः सार्धद्विशं ह्ली णीहशगाम ॥ उपरि निदधन्स्वादं दोरुदस्तिलपा

दयोः सकिल शुशुभे कालालाको विचित्र कलिहरिः ॥ १८ ॥ कंसस्य कर्तुमधिभूमि

सदीयधाम्नो द्वारप्रदेशमिव जिष्णुपदस्य विष्णुः ॥ क्षिप्रं विधाय सघर्णानयनं च

पित्रोश्चक्रे विघातुमपवारणमिव मल्ले: ॥ १९ ॥ उपासितुः कण्टकमूरपि प्रभो विपल्लु-

अं? = Pain, Sin, misery वा पल्लवपत्य(कम्मह्लू) केतात् ॥ न विव्यथे मल्लवपुः प्रहारमा (क) (सच्चाव्यहो)

अतोऽप्यसौ बल्लव तल्लजाङ्गजः ॥ २० चटचटारव संश्रवण स्फुटद्धृदनुसो

स्थ्यकृतेऽघतहस्तकाः ॥ किमबलास्तत एव गलज्जलादहिशिरहिशिरखि 33

तल्लज = Excellent

संश्रवण = कान = आइकणं

त कज्जलाः २१ चैतन्येन समं विरूध्य बहुशः क्रान्तं परिभ्राम्य तं चाणूरं-
मनसा सहाश्रुपयसा सार्धं निपात्य क्षितौ ॥ तत्राभोज कुलाधमस्य सह
सा तस्याहन निर्मथ्य वै स्वाकं दुर्यशसा सुरेन्द्रभवनं श्रीमत्प्रभुः प्राहिणोत्
२२ दर्पान्धान मिवाहत्य मुष्टिकं बाह्यमुष्टिकम् ॥ अनायासेन कालाङ्कं ता
लाङ्कोप्यनयद्बलो २३ मञ्चारूढं लिहन्दृग्भ्यां तं चापि भगिनीसुतम् ॥
पंचाप्य सन्नवैत्कण्ठ संचार प्रवणान्खलः २४ विकोशीभविष्यन्स्वयं
मुक्तिमार्गाध्वनीनस्थिरस्याहितं भोजराजः ॥ करान्निष्यासिं कोशहीनं
व्यतानीदशक्यं किमस्तीश सान्निध्यलाभे २५ अविनयफलभोगायाः
तमोधाम्नोनिरस्तो (गतिन्द्राक्) कुमतिरपिनपायाद्दोलितो निकृतार्थः ॥ इति

सुंदर (अरणात्याती) २ गमे दिराते उपादरते स्यातनी

अरण्यामहीतां

तुलमघिरङ्घ्यार्तितनं संविधत्तुन्न्तदुपरि समहात्माविश्वकुक्षिः पपात २६ अरंगेय
कीर्तिः परंगेहमेषोश्रयः कंसमेकं नरंगे चकर्ष ॥ सतामानन्दाकिंतु नेत्र्याश्चापि
श्रोत्रेऽनुकुरात्साधुशब्दं गलद्वारधाराम् २७ स्वार्थमुक्तविपदो रथपित्रोः सांत
नायतज्जौ प्रणमन्तौ ॥ क्षिप्रव्यासमिवदातु मधत्तां पादबद्धनिगडं निजपाणी
२८ नकेवलं तत्र विशंखलासा पित्रोः पदाञ्जालिरकारि ताभ्याम् ॥ श्लक्ष्णैर्वचो-
भिः पुरु सान्त्वयद्भ्यां नेत्रांभसा वृष्टिरपि स्वकानाम् २९ कराभ्यां स्पृशन्तौ भृशा
न्तौ निजाङ्गं कृशां वर्धयन्तौ दृशं तोषयन्तौ ॥ नृशंसं हतं तं शपन्तावनन्तं य
दोर्वंशभूषायितौ हृष्यतः स्म ३० ब्रह्माद्या अपि हृदि यन्निदेशमालामव्यग्रं कि
ल दधते सुरेश्वरोपि ॥ कृत्यात्सौ बलसमपृच्छदस्तशंकः स्वैर्नैवार्पितपदमु 34

x कृष्णाने देखील अलौकिक ... कमरेवर बांधली

त्यक्तं

ग्रसेन भूपम् ३१ सत्कृत्य दिव्यवसनाभरणैर्विभुभ्यां प्रस्थापितः स्ववसतिं प्रति
गोपभूपः ॥ दूरे समुज्झितमपूलमिवेशपादैः सिच्यन्त्ययोः व्रजपथं प्रविलाप-
वाग्भिः ३२ यस्यां कटौ रोषजुषा बबन्धे यशोदया लौकिकशासनाय ॥ तत्रैव
तस्त्रिह मलौकिकाय रज्जुर्नियोगाय तु शौरिणापि ३३ एकैकयापि कलयादि
वसस्य धीमानेकैककां किल कलां पठितुं क्षमोऽपि ॥ षष्ट्या चतुर्भिरपि
तैः सबलोऽनगाहे तावत्(वती) वता गुरुकुले चिरवासमिच्छन् ३४ शिष्-
ष्यं गुरोः प्रथमपक्षमनीचगम्यां तस्यामिवेन्दवकलां विशदां स्वनिष्ठाम् ॥
गोपीमतो स्फुटयितुं तमयुङ्क्त दर्शनाशंगादितस्य तमसोऽपगमाय देवः ३५
आहत्य पापनिषद्रसाः सुमतिना तेन श्रवोभ्यन्तरे निक्षिप्ता विरहानलं शमयितुं

ज्या कमरेवर दोरी बांधली ती

शहरात घेऊन त्याकरितां

आकूत = Meaning, purpose          x Lustful, desirous

दोहंप्रसूतालयोः ॥ गोविन्दस्यतदीयपूर्वचरितस्मृत्यैकरुध्दे हृदि प्रायोल

ब्धपदाद्दृगम्बुकपटाद्रूपस्तमेवाश्रयन् ३६ मध्येकृत्यभ्रमरकमरं नैरपे- disregard indifference

sent

क्ष्यंप्रकाश्यश्रीकान्तेनप्रहितमहितध्वंसनव्यग्रितेन ॥ ऊचुर्दूतं सुकृतनि

समूह वहैः पूतमाकूतगर्भं गोप्यः सोप्यस्खलितमशृणोदश्रुणोत्क्लिन्नचक्षुः ३७ आर्द्र

नमस्कार

श्रीमन्नुद्धवतुभ्यमानतिशतं भूयः कदायास्यति श्रीकृष्णो व्रजगोकुलंप्रति

वयन्त्यसङ्केतराशया ॥ त्रातुंतद्विरहादसूञ्जिगमिषून्श्रीवज्रहस्तांजग

त्यात्रीन्नित्यमुपास्महे व्रजजुषः कात्यायनीं प्रागिव ३८ भोः श्रीमदुद्धव

वदया वद यादवेशः संतुष्य किञ्चिदुपलब्धविलेपनेन ॥ कुब्जातनौ कि

मभिलाषकरमिन्व्यलिम्पत्सिमोरापि स्मरति यन्न परोतु दूरे ३९ आशातं कि ३९

